यजमानः आचम्य प्रणायामंकृत्वा अद्येत्यादि.

मम आत्मनः-श्रुतिस्मृतिपुराणोक्त फल प्राप्त्यर्थं पृथ्वीदानसमफल प्राप्त्यर्थं श्री महाविष्णु प्रीत्यर्थं प्रत्यक्ष गोदानेअसमर्थः अहम् तत् प्रतिनिधीभूतम् यथाशक्ति द्रव्यदानंकरिष्ये। निर्विघ्नार्थं गणपतिपूजनं / स्मरणंवा करिष्ये. तत् कृत्वा. स्वर्णशृंगीं रौप्य खुरां, ताम्रपृष्ठीं घंटाग्रैवेयां, (मुक्तालांगूलां कांस्योपदोहिनीम् सर्वाभरणभूषितांगां सितवस्त्रादिभिः भूषितांगां पूजयिष्ये) तप्रतिनिधि भूतं द्रव्यं पूजयिष्ये गवे नमः। द्रव्यस्वरुपी गवे नमः। इतिमंत्रेण पूजनं कृत्वा। इमां द्रव्य स्वरुपां गां, सदक्षिणा रुद्र दैवत्यां तुभ्यमहं संप्रददे। प्रतिगृह्यताम् प्रतिगृह्णामि। यज्ञसाधनभूता या विश्वस्याघौघनाशिनी।
विश्वरुप धरो देवः प्रीयतामनया गवा।

**प्रार्थना**

गावो रक्षंतुमे पुण्यं गावो रक्षंतुमे यशः।
नमो ऽस्तु कामधेनुभ्यो याः पुनंति जगत्रयम्।।

**३ शतगोदान संकल्प श्री गणेशाय नमः।**

शतंगावः सवृषभा, धेनूपस्कर संयुताः।
दत्वातुब्राह्मणेभ्यस्तु, विशुध्देनांतरात्मना।।
शिवादि सर्वलोकेषु, यथेष्टं मोदते तु सः।।

पुण्यकाले शुचिराचम्य, गणपति, कुलस्वामी, कुलदेवताभ्यो फलतांबूलादि दत्वा, देवतावंदनपूर्वक गृहवृध्दान् नमस्कारं कृत्वा, हस्ते अक्षताः गृहीत्वा श्रीमन्महागणाधिपतये नमः। सुमुखश्चैक -------- श्रीमद्भगवतो --------- यथायथं राशिस्थान ------ अमुक गोत्रोत्पन्नः अमुक शर्मा अहं. मम समस्त पापक्षयपूर्वक सिध्दचारण, सेवितार्कवर्ण किंकिणी, जालमालि, विमानारोहण, अनेकमन्वंतरावच्छिन्नेंद्रादि, सकल लोकपालाधिकरण, पुत्रपौत्रसमन्वित, शिवपुरादि, सर्वलोक निवासानंतरम् अंते विष्णु सायुज्यता प्राप्तिकामः, वृषाधिक सालंकृत, गोशतदानं करिष्ये। तदंगं गणपतिपूजनं, पंचवाक्यैः पुण्याहवाचनं सवृषभगोशतपूजनं, (तत् मूल्योपकल्पितरजतमुद्रापूजनं) ब्राह्मणपूजनं करिष्ये।

गणपतिपूजनं, पंचवाक्यै पुण्याहवाचनं कृत्वां, गोभ्यो नमः "इति रजतमुद्राः गंधपुष्पहरिद्राकुंकुमसहित पूजयित्वा नमस्कारं कृत्वा, ब्राह्मणाय (आचार्याय) वस्त्रालंकारादिभिःसंपूजयेत्।

**गाः प्रार्थयेत् तत्रमंत्राः -**

गावः सुरभयोनित्यं, गांवो गुग्गुलगंधिकाः।
गावः प्रतिष्ठा भूतानां, गावःस्वस्त्ययनंमहत्।।१।।
अन्नमेव परंगावो, देवानां हविरुत्तमम्।
पावनं सर्वभूतानां, रक्षंतिच वहंति च।।२।।
हविषामंत्रपूतेन, तर्पयंत्यमरानपि।
महर्षीणांच होतॄणां, गावो होमेप्रतिष्ठिताः।।३।।

सर्वेषामेवभूतानां, गावः शरणमुत्तमम् ।
गावःसर्वस्यलोकस्य, गावोधन्याः सवाहनाः ।।४ ।।
नमो गोभ्यः श्रीमतिभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च, पवित्राभ्यो नमो नमः ।।५ ।।
घृतक्षीरप्रदागावो, घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्ताः तामेसंतु सदागृहे ।।६ ।। इति
वृषभं प्रार्थयेत् - धर्मस्त्वं वृषरुपेण जगदानंदकारक ।
अष्टमूर्ते रधिष्ठान, मतः पाहिसनातन ।।७ ।। इति

ततः सतिलकुशानादाय अद्येत्यादि ---- फलप्राप्त्यर्थं मम समस्तपापक्षयार्थं, पूर्वसंकल्पित सवृषभगोशतसहिरण्य दक्षिणायुताः रुद्रदेवता प्रीत्यर्थं गोशतमूल्य प्रतिनिधिभूत रजतमुद्राः विभज्य नानानामगोत्रेभ्यो ब्राह्मणेभ्यः दातुमहमुत्सृजे, (उदक सोडावे) न मम । तेन पापापहर्ताः श्रीपरमेश्वरःप्रीयताम् । तत्सत् ब्रह्मार्पणमस्तु । कृतस्य कर्मणः सांगता सिध्द्यर्थं, यथोपपन्नेन अन्नेन एकं ब्राह्मणं भोजयिष्ये । भूयसीं दक्षिणांच दास्ये । कर्मांते व्दिराचम्य, त्रिवारं विष्णुस्मरणं कार्यम् । ।इति सवृषगोशतदान संकल्पः ।।

संदर्भ- "दानचंद्रिका ग्रंथ"

कै. ना. का. लेले पुणे यांच्या संग्रहातून

नित्यान्नदाता, तरुणाग्निहोत्री
मासोपवासीच, पतिव्रता च ।
वेदांतवित, चंद्रसहस्रदर्शी
षड् वंदनीयाः इह जीवलोके ।।१।।

**श्री गणेशाय नमः । भूमिपूजन संकल्प**

सपत्नीकः कर्ता प्राङ्मुख उपविश्य, सुवासिन्या कृतमंगलतिलकः, आचम्य (प्राणयामं कृत्वा) गणपत्यादि देवतानां कृते फलतांबूलादि दत्वा, नत्वा च वृध्दान्, स्वासने उपविशति। हस्ते अक्षताः गृहीत्वा, श्रीमन्महागणाधिपतये नमः ---------------- सुमुखश्चैक ------- अमुकगोत्रोत्पन्नः अमुक शर्मा/वर्मा अहं, अस्माकं सकलकुटुंबानां, क्षेम, स्थैर्य आयुरारोग्य, ऐश्वर्यादि अभिवृद्ध्यर्थं, अत्र निवासार्थं, आ.ाच्छतानां सर्वेषां कुटुंबीयानां व्दिपद, चतुष्पद,सहितान ं, शांत्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं सर्वविध, अभ्युदयार्थं, तथाच सकलानां गृह्यकर्म आचरण समये, निर्विघ्नता प्रप्तिपूर्वक, धन, धान्यादि अभिवृद्ध्यर्थं, कायिक, वाचिक, मानसिक पीडा, परिहारार्थं, भवन निर्माणकाले, सूचित, संभाव्य, सकल अरिष्टानां परिहारपूर्वक, गुल्मलतादि, छेदन, कृमिकीटक, जलचर प्राणिघातादि दोष परिहारार्थं, भूत-प्रेत-पिशाच-यक्षराक्षसादीनां, जनितविविध विघ्न, निवारणार्थं अमेध्य (घाणेरडे) कर्मवशात्, जातदोष परिहारार्थं, अस्मिन् क्षेत्रमध्ये, चोर, पाखंड, पतित, म्लेंच्छ, शूद्रादीनां प्रवेशेन, सूचित, विविध, दोषाणां, तथाच, तेषां मूत्रपुरीषादि, अश्रुपात जातदोषाणां निरसनार्थं भवन निर्माण काले, सर्वापत्तिनिवारणपूर्वक, क्षुद्रजनानां दृष्टिदोषबाधा निवारणार्थं,

**(शाळेची इमारत बांधावयाची असेल तर )**

।।शाला; गृहारंभ पादभूतखननादि संकल्पः (आग्नेय खननं)।। अस्मिन् ग्रामस्थ जनानां अन्यग्रामस्थ जनानांच. बालकानां. शिक्षण प्रवीणताच शिक्षकेभ्यः विद्याप्राप्त्यर्थं. नूतनशाला गृहारंभे पादभूत (वितस्तिमात्रं) गर्तखननं. भूम्यादि देवता प्रीत्यर्थं पूजनं करिष्ये। तदंगं गणेश पूजनं, नवग्रह पूजनं, वरुण पूजनं करिष्ये।। 

संकल्पित कामनया, निर्विघ्नतया च वास्तु परिपूत्यर्थंच, आदित्यादि नवग्रहाणां आनुकूल्यार्थंच, एकादशस्थानवत् शुभफल, प्राप्त्यर्थ, स्थलशुध्द्यर्थं सूर्यप्रमुख नवग्रह, वरुणपूजनं करिष्ये। आदौ स्थलशुद्ध्यर्थं, गोमूत्र प्रोक्षणपूर्वक, राक्षोघ्नमंत्र पठनं पश्चात् निर्विध्नार्थं, गणपति पूजनं, पंचशब्दैः पुण्याहवाचनं (स्वस्तिपुण्या) करिष्ये। तथाच वराह, कूर्म अनंत (शेष, नाग) भूमि, देवतानां शस्त्रदेवतानां पूजनं करिष्ये।

**राक्षोघ्न मंत्र जप - (यथाशक्ति)(सर्वत्र अक्षतान् क्षिपेत्)**

रक्षोहणं सुरवरं, पायुं देवर्षि पूजितम्।
सायुधंशक्तिसंहितं, वंदेऽरिष्ट निबर्हणम्।।१।।

ततः गणपति, पूजनं, पंचशब्दैः पुण्याहवाचनं, नवग्रह, वरुण, पूजनं, कृत्वा, वराहादि देवतानां पूजनं कुर्यात्।

वराह कच्छप व नाग यांच्या प्रतिमांची पूजा करावी प्रतिमा नसतील तर सुपारी ठेवून पूजा करावी

**वराह देवता (क्रोड - वराह)** स्मरणं आवाहनंच

यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्
क्रौडीतनुं सकलयज्ञमयी मनंतः।
अंतर्महार्णवमुपागतमादिदैत्यं
तंद्रंष्ट्र्याऽद्रिमिव वज्रधरो ददार।।१।।

वराह देवतायै नमः, वराहदेवतां आवाहयामि।

**कूर्म - (कच्छप)**

क्षीरोदधावमरदानव, यूथमानां,
उन्मंदताममृत लब्धय आदिदेवः ।

पृष्ठेनकच्छपवपुर्विदधार गोत्रं
निद्राक्षणोऽद्रि परिवर्तकषाय कंडूः ।
कूर्मदिवतायै नमः । कूर्म देवता आवाहयामि ।

**अनंत (शेष/नाग)**

एह्येहि नागेंद्र धराधरेश, सर्वामरैर्वंदित पादपद्म ।
नानाफणामंडलराजमान, गृहाण पूजां भगवन्नमस्ते ।।
अनंत देवतायै नमः । अनंत देवतां आवाहयामि ।।

**धरा (भूमि)**

एह्येहि विश्वेश्वर विश्वधात्रि, वसुंधरे सर्वजनाश्रये च ।
संशोभमाने धररत्नबीजे, गृहाण पूजां पृथिर्विं प्रणौमि ।।
धरादेवतायै नमः । धरादेवतां आवाहयामि ।।

**वराहादि आवाहित चतुष्टय देवतानां पूजनं कुर्यात् ।**

वराहादि देवताभ्यो नमः "इति नाममंत्रेण पूजां कुर्यात ।
पूजा झाल्यावर पृथ्वी, कूर्म, वराह, वास्तु या देवतांना उद्देशून १, १, अर्घ्य द्यावयाची आहेत. एका फुलपात्रात पाणी भरुन घ्यावे, त्यात गंध, अक्षता, फूल, दूर्वा घालून ठेवाव्या, प्रत्येक अर्घ्य देतेवेळी उजव्या हातात पैसे व सुपारी घेऊन तयार केलेले अर्घ्यपात्रातील पाणी (अर्घ्य) "इदमर्घ्यं समर्पयामि'' असे म्हटल्यावर उजव्या

हातावरुन ताम्हनात समोर सोडावे. कर्त्याने उत्तराभिमुख बसून अर्घ्य द्यावे.

१ आगच्छसर्वकल्याणि, वसुधे लोकधारिणी।
उद्धृतासि वराहेण, सशैलवनकानना।।१।।
मंदिरं कारयाम्यद्य, त्वदूर्ध्वं शुभलक्षणे।
गृहाणार्घ्यं मया दत्तं, प्रसन्ना शुभदा भव।।२।।
धरायै नमः। इदमर्घ्यं समर्पयामि।
२ वसुधेऽनंतगर्भासि, शेष्ज्ञस्योपरिशायिनी।
तवपृष्ठे ददाम्येतद्, गृहाणार्घ्यं धरित्रि मे।।३।।
धरायै नमः। इदमर्घ्यं समर्पयामि।
३ सर्वलक्षणसंपन्नः सर्वेशः कमठाधिपः
स्थानं देहि गृहं कर्तुं, गृहाणार्घ्यं नमोऽस्तुते।।४।।
कूर्माय नमः। इदमर्घ्यं समर्पयामि।
४ हेमकुंदप्रतीकाश, नागानंत महाफणिन्।
स्थानं देहि गृहं कर्तुं, गृहाणर्घ्यं नमोऽस्तुते।।५।।
अनंताय नमः। इदमर्घ्यं समर्पयामि।
वास्तोष्पते त्वममुत्तिष्ठ, संसार स्थितिकारक।
गृहाणार्घ्यं मयादत्तं गृहारंभायत`नमः।।
वास्तुपुरुषाय नमः इदमर्घ्यं समर्पयामि।
अर्घ्य देऊन झाल्यावर आवाहित देवतांची प्रार्थना करावी.
पृथ्वित्वया धृता लोका, देवित्वं विष्णुना धृता।
त्वंच धारय मां देवि, पवित्रं कुरु चासनम्।।१।।
समुद्रवसने देवि, पर्वतस्तनमंडले।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे।।२।।
सर्वेषामाश्रया भूमिः वराहेण समुदधृता।
अनंतसस्य दात्री या, तां नमामि वसुंधराम्।।३।।

सर्पाधीश नमस्तुभ्यं, नागानांच गणाधिप।
सर्वारिष्ट प्रशमनं, भक्तानामभयप्रद।।४।।
आवाहित देवताभ्या नमः। प्रार्थनां समर्पयामि।
अनेनकृत पूजनेन गणपत्यादि आवाहित देवताः प्रीयतां।
न मम। तत् सत् ब्रह्मार्पणमस्तु। आचार्याय दक्षिणा दानं।
कर्मांति व्दिर चमनं। त्रिवारं विष्णु स्मरणं कुर्यात्।
इति भूमिपूजनम्।
शिलान्यास :- आग्नेय कोणे, कर्तव्यः।

सूचना- हातभर उंच, १ वीत रुंद अशी शिला पसंत करुन शिलेवर हळद कुंकवाचे, स्वस्तिक काढावे सूत व वस्त्र गुंडाळावे. पंचगव्य / गोमूत्र, पंचामृत स्नान घालावे. नंतर हळद कुंकू फुले वाहून पूजन करावे.

आवाहन, पूजन मंत्र - ("पूर्णानाम्नी शिला")
पूर्णे त्वंतु महाविद्ये, सर्वसंदोह लक्षणे।
सर्वसंपूर्णमिवात्र, कुरुष्वांगिरसः सुते।।
"पूर्णानाम्न्यै शिलायै नमः" इतिमंत्रेण पूजां कुर्यात।

।। छापखान्याची पूजा।। दीपावलि (वर्षवृध्दि) संकल्प
प्राधान्यनिमित्तं प्रतिवार्षिक विहितं आयसाक्षर यंत्रसमुच्चयस्य. योगक्षेम. सिध्दिव्दारा तत् व्यवहारसिध्दयर्थं अक्षरन्यास अधिष्ठात्री श्रीमहासरस्वती. देवताप्रीत्यर्थं. पूजनं करिष्ये। तदंगं गणपतिपूजनं, नवग्रह पूजनं, वरुणपूजनंच करिष्ये।।

।। फोटोआर्टस्टूडिओनूतनस्थल संकल्प।।

अस्मिन् स्थाने अद्यदिनमारभ्य छायाचित्रकार्ये. निर्विघ्नता तथा जनताप्रीति संपादन पूर्वकं. अस्मिन् व्यवसाये उत्कर्षता प्राप्तये तथा प्रामुख्येन स्थित साधनानां तत् अधिष्ठित अग्नि, सूर्यनारायण, प्रीतिव्दारा सूर्यरश्मिभि: विद्युत सहाय्येनच तत् कर्मसुसफलताप्राप्त्यर्थं मान सन्मानांच, अग्नि, सूर्य, ब्रह्मा, विष्णु, महेश, गौर्यादि, लक्ष्मीपूजनंच करिष्ये। निर्विघ्नार्थं गणेशपूजनं पंचशब्दै: पुण्याहवाचनं, वरुणं तथाच संकल्पस्थित देवतानां पूगीफलेषु आवाहनपूर्वक पूजनं च करिष्ये।।

।। विद्युत स्थानाचा आरंभ संकल्प।।

मम आत्मना सह, अस्मिन्स्थाने, व्यवसाय समाविष्टजनानां सेवकादीनां, क्षेम, शांति, पुष्टी:, तुष्टीव्दारा, स्थैर्यार्थं, तथाच, कार्योपयोगीवस्तूनां आय, व्यय, संग्राह्य वस्तूनां, क्रय विक्रयादि व्यवहारे, जनता प्रीति, संपादनेन, सकलार्थ प्राप्त्यर्थं, यंत्रकर्मकारिजनानां, घातपातादिभ्य:, निर्विघ्नतया, सुखेन, रक्षणार्थंच, उत्कर्षार्थं, विद्युत् सहायेन, निर्माण, नाना विभाग, यंत्राणां, स्थापनार्थं, विद्युतशक्ति, अधिष्ठात्री, अग्निदेवता, तत्अनुषंगेन विहित, विष्णु शिव, गौरी, लक्ष्मी, पूगीफलेषु पूजनं करिष्ये। तदंगं गणेशपूजनं, पंचशब्दै पुण्याहवाचनं, नवग्रह तथा वरुण पूजनंच करिष्ये।

**यमव्दितीया (भाऊबीज) संकल्प।।**

मम इहजन्मनि जन्मांतरेच अखंडित, सौभाग्य, पुत्रपौत्रादि, सुखपूर्वकं श्रीयमधर्मात्मक, महाविष्णुप्रीत्यर्थं, व्रतकल्पोक्त फलावाप्तये, अद्य कार्तिक शुध्द व्दितीया व्रत प्रधानांगत्वेन विहितं यम यमुने पूजनं, तथाच, अभ्यंग स्नान, उव्दर्तन, अनुलेपन, भोजनादि, यथाशक्त्या वस्त्रादिभिः भ्रातृपूजनं करिष्ये। तदंगं गणेश पूजनं स्वस्ति पुण्याहवाचनं मातृका पूजनं नांदीश्राध्दं करिष्ये। ततः एकं कलशं प्रतिष्ठाप्य, सुवर्ण प्रतिमयोः, यम यमुने, षोडशोपचारैः, पूजनं करिष्ये।। यमयमुनयोः पूजनं कृत्वा।

**मंत्र**

धर्मराजनमनस्तुभ्यं, नमस्ते यमुनाग्रज।
पाहिमां किंकरैः सार्धं, सूर्यपुत्र नमोस्तुते।।१।।
यमः स्वसर्नमस्तेस्तु, यमुने लोकपूजिते।
वरदाभवमे नित्यं, सूर्यपुत्रि नमोस्तुते।।२।।

यमुनासहित यमाय नमः इति षोडश उपचारैः संपूज्य। अर्घ्यंदद्यात् तत् यथाः - एह्येहिमार्तंडज पाशहस्त, यमांतको लोकधरामरेश। भ्रातृव्दितीया कृतदेवपूजां, गृहाणचार्घ्यं भगवन् नमस्ते।।१।।

यमुनासह यमाय नमः इदमर्घ्यं समर्पयामि।
भ्रातृसत्कारंकृत्वायमुनासह यमाय नमः इदमर्घ्यं समर्पयामि।
भ्रातृसत्कारंकृत्वा भगिन्या नीराजनं कार्यं।।
अनेन कृतपूजनेन यमयमुने तथा अन्य देवताः प्रीयतां न मम।

श्री गणेशाय नमः ।

**अधिमासः । संक्रांतिरहितोमासोऽधिकमासः ।। संकल्प**

तत्र अपूपदानमुक्तं रत्नावल्यां ।
सगुडान् साज्यपात्रांश्च त्रयस्त्रिंशत् अपूपकान् ।
कांस्यपात्रे विनिक्षिप्य हिरण्येन समन्वितान् ।।१।।
उपानच्छत्रसंयुक्तं विप्राय विनिवेदयेत् ।
यावंति तत्र छिद्राणि अपूपानांच पार्थिव ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।२।।

निर्णयसिंधौ पाद्मे -
त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ।
तथा अधिमासेतु संप्राप्ते त्रयस्त्रिंशत्तुदेवाताः ।
उद्दिश्यापूपदानेन पृथ्वीदान फलं लभेत् । इति

अथ त्रयस्त्रिंशद्देवताश्च श्रुतौ उक्ताः ।
अष्टौवसव, एकादशरुद्र, व्दादशादित्यः, प्रजापतिः, वषट्कारश्च,

**।।अयमत्रप्रयोगः संकल्पश्च ।।**

देशकालौसंकीत्य, मम अष्टवसु, एकादशरुद्र, व्दादशादित्य, प्रजापतिः, वषट्कारात्मक, श्रीपरमेश्वर प्रीतिव्दारा, सकलमलविशुध्दि, सर्वपापक्षयपूर्वक, लक्ष्मीसंपत्ति, पुत्रपौत्रादि, अभिवृध्दि पृथ्वीदानसमफल, स्वर्गलोक निवासप्राप्त्यर्थं, मलमास विहितं अपूपदानं करिष्ये। विप्रस्य अग्रे यथाशक्ति सोपस्कार अपूपपात्रं निधाय प्रार्थयेत् -

चंद्रांशुनिर्मलापूपाः शालितंडुलनिर्मिताः ।
आहारः सर्वदेवानां ते मे कुर्वंतु च मंगलम् ।।१।।
विष्णुरुपी सहस्त्रांशुः सर्वपापप्रणाशनः ।
अपूपान्नप्रदानेन मम पापं व्यपोहतु ।।२।।

यस्य हस्ते गदाचक्रं गरुडोयस्य वाहनः ।
शंखः करतले यस्य समे विष्णुः प्रसीदतु ।।३।।
कलाकाष्ठादिरुपेण निमेषघटिकादिना ।
योवंचयति भूतानि तस्मैकालात्मने नमः ।।४।।
कुरुक्षेंत्रमयं देशः कालः सर्वव्दिजो हरिः ।
पृथ्वीसममिदं दानं, गृहाणपुरुषोत्तम ।।५।।
मलानांच विशु द्‌ध्यर्थं, पापप्रशमनायच ।
पुत्रपौत्रादि वृध्द्यर्थं, तवदास्यामि भास्कर ।।६।।
इमान् त्रयस्त्रिंशत् संख्याकान् अपूपान घृतपात्रादिसहितान्
कांस्यपात्रे निहितान्, अमुकशर्मणे, महाविष्णुस्वरुपिणे ब्राह्मणाय,
सदिक्षणं, संप्रददे। प्रतिगृह्णातु भवान् ।। प्रतिगृह्णामीतिब्राह्मणः ।।
ततः कर्ता प्राथयेत् -
नारायण जगव्दिज, भास्कर प्रतिरुपक ।
दानेनानेन पुत्रांश्च संपदंचाभिवर्धय ।।
कर्ता - अनेन मलमासविहित, अपूपदानेन, भगवान्
त्रयस्त्रिंशत् स्वरुपी परमेश्वरः प्रीयताम् ।।
अधिकमासात- व्दादशी, पौर्णिमा, व्यतीपात हे दिवस अपूपदानासाठी
अधिक श्रेष्ठ आहेत.
अपूपदान अन्य कोणत्याहि दिवशी दिले, तरी हरकत नही,

समाप्त

संदर्भ - कृत्यसंग्रह

**प्रायश्चिप्त संकल्प –**

आचम्य देशकालौ संकीर्त्य अमुक गोत्रोत्पन्न: अहं मम सपत्नीकस्य जन्मप्रभृति एतावत्कालपर्यंतं, ज्ञाताऽज्ञात कामाकाम, सकृत्, असकृत्, कायिक, वाचिक, मानसिक, सांसर्गिक स्पृष्टाऽस्पृष्ट दृष्टाऽदृष्ट भुक्ताऽभुक्त, पीतापीत, सकलपातक, अतिपातक, उपपातक, लघुपातक, संकलीकरण, मलिनीकरण, अपात्रिकरण, जातिभ्रंशकर, प्रकीर्ण पातकानां मध्ये संभावित पापानां निरसनार्थं, तथाच दैनंदिन व्यवहारमध्ये (शिखा, यज्ञोपवीत, प्रातःसायं संध्यादि) स्वस्वकर्मराहित्यदोषाणां अपनोदार्थ (षट्कृच्छ्र, प्रायश्चित्तं, तत् प्रत्याम्नाय गोनिष्क्रयीभूत) यथाशक्ति व्यावहारिकद्रव्य दानेन अहं आचरिष्ये।

।।समाप्त।।

# हरितालिका व श्रीगणेश चतुर्थी

हरितालिका व्रतास तृतीया चतुर्थीयुक्त घ्यावी आणि श्रीगणेश चतुर्थी तृतीया विद्ध घ्यावी असे शास्त्र आहे, त्याप्रमाणे या वर्षी भाद्रपद महिन्यामध्ये २७ ऑगस्ट २००६ रोजी रविवारी हरितालिका तृतीया व श्रीगणेश चतुर्थी एकाच दिवशी आहे. अशा वेळेस कोणतीही पूजा आधी वा नंतर करता येते. तृतीया समाप्तीपूर्वी हरितालिका पूजन करावयास पाहिजे असे नाही आणि तृतीया संपल्यावर श्रीगणेश पूजन करावयास पाहिजे असे नाही. उष:काला पासून मध्यान्हापर्यंत पूजाकाल असल्याने आणि दोन्ही व्रताचे कर्ते भिन्न असल्याने कोणतीही पूजा आधी वा नंतर करता येते. म्हणजे श्री गणेश पूजन आधी करून नंतर हरितालिका पूजन करता येईल.

घरातील देवपूजा झाल्यावर आपल्या आणि गुरुजींच्या सोयीनुसार श्रीगणेशाचे प्राणप्रतिष्ठापूर्वक पूजन करावयाचे आहे. त्यासाठी विशिष्ट नक्षत्र, विशिष्ट लग्न, अमृत, घबाड, शुभ, लाभ, अशा प्रकारचे मुहूर्त असण्याची आवश्यकता नाही. माध्यान्हकालपर्यंत कोणत्याही वेळी श्रीगणेशाचे पूजन करता येते.

**वंध्यत्व निवारणार्थ नागपूजा**– ( पान ५९ ते ६३)

नागपूजा विधान ही पूजा खाली दिलेल्या महिन्यात शुध्द पंचमीच्या दिवशी सकाळी करावी.

१ चैत्रे २ श्रावणमासे च ३ वैशाखे ४ कार्तिके तथा।

५ माघे शुक्लेच पंचम्यां कर्तव्यं नागपूजनम्।।

चैत्र, वैशाख, श्रावण, कार्तिक, व माघ या प्रत्येक महिन्यात शु. पंचमीच्या दिवशी फलप्राप्तीपर्यंत ही पूजा करावी.

आचम्य (प्राणानायम्य) गणपतिकुलस्वामी कुलदेवताभ्यो फलतांबूलादि समर्प्य, देवतावृध्दान् नमस्कृत्य. स्वासने उपविश्य हस्ते अक्षतान् गृहीत्वा श्रीमन्महागणाधिपतये नमः सुमुखश्चेत्यादि पठित्वा हस्ते जलमादाय अद्येत्यादि० पुण्यतिथौ मम आत्मनः पुत्रपौत्रादि, अनवच्छिन्नसंतति, स्थिरलक्ष्मी, कीर्तिलाभ, शत्रुपराजयव्दारा, सदभीष्टसिध्द्यर्थं, वंध्यत्वनिरसनपूर्वकं, दीर्घायुःपुत्रप्राप्त्यर्थं गर्भसंभवात् प्रसूतिपर्यंत गर्भस्य स्थिरता प्राप्त्यर्थं अद्य यथाज्ञानेन, यथामीलितउपचारैः देशकालाद्यनुसारतः तक्षकादि नवनागदेवतानां कृपाप्रसादार्थं, तक्षकादिनागानां आवाहनादि षोडशोपचार पूजनं करिष्ये. निर्विघ्नार्थं गणपतिपूजनादि करिष्ये.

गणपतिपूजनादि कृत्वा पूर्णपात्रे तत् तत् स्थाने मंत्रोच्चारपूर्वकं नवनागानां आवाहनपूर्वक षोडशोपचार पूजां कृत्वा, प्रार्थना करावी. –

पूर्व

| | | | | |
|---|---|---|---|---|
| | १ शेष | २ वासुकि | ३ कर्कोटकं | |
| उत्तर | ८ कंबल | १ तक्षक | ४ अनंत | दक्षिण |
| | ७ नील | ६ महापद्म | ५ शंखपाल | |

पश्चिम

पूर्णपात्रात मध्ये चांदीची नागप्रतिमा व अन्य ठिकाणी सुपारी ठेवून नागदेवतांचे आवाहन करावे. नागीण म्हणून गूळ ठेवून त्याची पूजा करावी. "तक्षकदि आवाहित देवताभ्यो मः" या मंत्राने पूजा करावी. दुधाचा नैवेद्य दाखवावा.

पूजा पूर्ण झाल्यावर म्हणावे –

नवकुलाय विद्महे विषदंताय धीमहि। तन्नः सर्पः प्रचोदयात्।

त्या नंतर मातीच्या मोठ्या पणतीत दूध ठेवून प्रार्थना करावी.

प्रार्थना मंत्र– अंतरिक्षेच ये सर्पा ये सर्पा भूमिपालकाः।
तेभ्यो दुग्धं मयादत्तं प्रजामृतमसिंचये।।

संकल्पाप्रमाणे गणपतिपूजनादिक करुन चित्रात दाखविल्या प्रमाणे पूर्णपात्रात मंत्रोच्चारपूर्वक नवनागांचे आवाहन करुन षोडशोपचार पूजा करावी.

नागपूजेसाठी आवाहन मंत्र - अक्षता वाहून चित्रात दाखविल्याप्रमाणे सुपारीवर नागदेवतांचे आवाहन करावे. प्रत्येक वेळी रजतप्रतिमायां/पूगीफले आवाहयामि असे म्हणावे.

१) वैश्यवर्गं नीलवर्णं फणैः पंचशतैर्युतम्।
युक्तमुत्तुंगकायं च तक्षकं प्रणमाम्यहम्।।१।।
रजतप्रतिमायां/पूगीफले तक्षकाय नमः।
तक्षकं आवाहयामि।

२) क्षत्रवर्गं पीतवर्णं फणैः सप्तशतैर्युतम्।
युक्तमुत्तुंगकायं च वासुकिं प्रणमाम्यहम्।।२।।
पूगीफले वासुकये नमः। वासुकिं आवाहयामि।

३) शूद्रवर्गं श्वेतवर्णं शतत्रय फणायुतम्।
युक्तमुत्तुंगकायं च कर्कोटं च नमाम्यहम्।।३।।
पूगीफले कर्कोटकाय नमः। कर्कोटकं आवाहयामि।

४) अनंत विप्रवर्गं च तथा कुंकुमवर्णकम्।
फणासहस्त्रसंयुक्तं तं देवं प्रणमाम्यहम्।।४।।
पूगीफले अनंताय नमः। अनंतं आवाहयामि।

५) शंखपालं क्षत्रियं च पीतं सप्तशतैः फणैः।
युक्तमुत्तुंगकायं च शिरसा प्रणयाम्यहम्।।५।।
पूगीफले शंखपालाय नमः। शंखपालं आवाहयामि।

६) वैश्यवर्गं नीलवर्गं फणैः पंचशतैः युतम्।
युक्तमुत्तुंगकायं च महापद्मं नमाम्यहम्।।६।।
पूगीफले महापद्माय नमः। महापद्मं आवाहयामि।

७) वैशवर्गं नीलवर्णं फणैः पंचशतैर्युतम्।
युक्तमुत्तुंगकायंच तन्नीलं प्रणमाम्यहम्।।७।।

पूगीफले नीलाय नमः। नीलं आवाहयामि।

८) कंबलं शूद्रवर्गंच शतत्रयफणैर्युतम्।
आवाहयामि नागेशं प्रणमामि पुनः पुनः।।८।।
पूगीफले कंबलाय नमः। कंबलं आवाहयामि।

९) विप्रवर्गं श्वेतवर्णं सहस्त्रफणसंयुतम्।
आवाहयाम्यहं देवं शेषं वै विश्वरुपिणम्।।९।।
पूगीफले शेषाय नमः। शेषं आवाहयामि।

नवनागांबरोबर नागीण म्हणून गूळ ठेवून त्यावर "अमृतरक्षिण्यै नमः। अमृतरक्षिर्णीं आवाहयामि'' असे म्हणून अक्षता वाहून आवाहन करावे व नवनागांबरोबर पूजा करावी.

संकल्पा प्रमाणे आवाहन केलेल्या सर्वांची पूजा झाल्यावर सर्पसूक्त म्हणावे.

**सर्पसूक्त** – ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा ।।१।।
विष्णुलोकेच ये सर्पाः वासुकि प्रमुखाश्च ये।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।२।
रुद्रलोके च ये सर्पाः तक्षकप्रमुखास्तथा।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।।३।।
खांडवस्य तथा दाहे स्वर्गं ये च समाश्रिताः।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।।४।
सर्पसत्रे च ये सर्पा आस्तिकेन च रक्षिताः।।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।।५।
प्रलये चैव ये सर्पाः कर्कोटप्रमुखाश्चये। ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।।६।।

धर्मलोके च ये सर्पाः वैतरण्यां समाश्रिताः। ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा। ।७। ।
ये सर्पाः पार्वतीयेषु दरीसंधिषु संस्थिताः।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा। ।८। ।
ग्रामे व यदि वाऽरण्ये ये सर्पाः प्रचरंति हि। ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा। ।९। ।
पृथ्विव्यां चैव सर्पा ये, सर्पा ये बिलसंस्थिता। ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा।१०। ।
श्ररसातले च ये सर्पा अनंताद्या महाबलाः। ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु मे सदा। ।११। ।

इति सर्पसूक्तम्।

उदक सोडावे - अनेन कृतपूजनेन नवनाग देवता प्रीयतां न मम (गुरुजींकडून विसर्जनासाठी अक्षता घ्याव्यात ) गुरुजींना विडा दक्षिणा देऊन नमस्कार करावा. नंतर स्वतः पूजकाने सर्पसूक्त वाचावे. दुसऱ्या दिवशी गणपति व नागदेवातांचे अक्षता वाहून विसर्जन करावे. (संदर्भ- व्रतोद्यापन चंद्रिका )

इति नागपूजा समाप्ता।

## दशविध स्नान

नदीसमीपं गत्वा  आचम्य --- (प्राणायामादि कृत्वा) अद्येत्यादि ------ शुभपुण्यतिथौ मम कायिक वाचिक मानसिक सांसर्गिक चतुर्विध सकल पापक्षयार्थं दशविध स्नानानि करिष्ये।

असा संकल्प करुन भस्मस्नानादि दशविध स्नान करावे.

१)भस्मस्नान - यथाग्निर्दहते भस्म तृणकाष्ठादिसंचयम्।।
तथा मे दहतां पापं कुरु भस्म शुचे शुचिम्।।१।।

२)मृत्तिकास्नान - अश्वकान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे।।
उद्धृतासि वराहेण कृष्णेन शतबाहुना।।१।।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्।।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमंत्रिता।।२।।

३)गोमयस्नानम् - गोमये वसते लक्ष्मीः पवित्रं सर्वमंगलम्।।
स्नानार्थं संस्कृतं देव पापं मे हर गोमय।।१।।
अग्रमग्रं चरन्तीनामौषधीनां वने वने।।
तासामृषभपत्नीनां पवित्रं कायशोधनाम्।। २।।
यन्मे रोगं च शोकं च तन्मे दहतु गोमय।।३।।

४)पंचगव्यस्नानम् - गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।।
सर्वपापविशुध्द्यर्थं पंचगव्यं पुनातु माम्।।१।।
५)गोरजस्नानम् - गवां क्षुरेण निर्घृष्टं यद्रेणु गगने गतम्।।
शिरसा तेन संलेपो महापातकनाशनम्।।१।।
६)धान्यस्नानम् - धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम्।।
तेन स्नानेन देवेश मम पापं व्यपोहतु।।१।।
७)फलस्नानम् - वनस्पतिरसो दिव्यः फलपुष्पवृतः सदा।।
तेन स्नानेन मे देव फलं पुष्पमनन्तकम्।।१।।ण्य।
८)सर्वौषधीस्नानम् - औषध्यः सर्ववृक्षाणां तृणगुल्मलतोभ्दवाः।।
दूर्वासर्षपसंयुक्ताः सर्वौषध्यः पुनन्तु माम्।।१।।
९)हिरण्यस्नानम् - हिरण्यंगर्भगर्भस्थं हेमबीजं विभावसोः।।
अनन्तपुण्यफलदं मम पापं व्यपाहतु।।१।।
१०)कुशोदकस्नान - गंगोदकस्नानम्-
विष्णुपादाग्रसंभूते गंगे त्रिपथगामिनि।।
धर्मद्रवेति विख्याता पापंमे हर जाह्नवि।।१०।।
।। इति दशविधस्नानम्।।

## ।।अथ वरुण सूक्तम्।।

देवदानव संवादे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुंभः विधृतो विष्णुनास्वयम्।।१।।
त्वत्तोयेसर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः।
त्वयि तिष्ठंति भूतानि त्वयिप्राणाःप्रतिष्ठिताः।।२।।
शिवःस्वयं त्वमेवाऽसि विष्णुस्त्वंच प्रजापतिः।
आदित्या वसवोरुद्रा विश्वेदेवाः सपैतृकाः।।३।।
त्वयितिष्ठंति सर्वेऽपि यतःकामफलप्रदाः।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव।।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा।।४।।
पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक।
पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते।।५।।
नमोनमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमंगलाय।
सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते।।६।।

।।इति वरुणसूक्तम्।।

**दशदिक्पाल देवता -**

१ इंद्र - वज्रायुधं देवदेवं पूर्वदिक्पालकं सदा।
अनेकयज्ञकर्तारं इंद्रं वंदे सुरेश्वरम्।।१।।

२ अग्नि - आग्नेयदिक्प्रभुं दीप्तं शक्तिप्रहरणं परम्।
ज्वालाव्याप्ततनुं वंदे अग्निं लोकशुभंकरम्।।२।।

३ यम - सर्वप्राणिनियंतारं याम्य दिक्पातिमीश्वरम्।
महादंडधरं देवं यमं तं प्रणमाम्यहम्।।३।।

४ निर्ऋति - राक्षसाधिपतिंशूरं नैर्ऋत्याधीशमीश्वरम्।
खड्गप्रहरणं वंदे निर्ऋतिं लोकरक्षकम्।।४।।

५ वरुण - पाशायुधधरं देवं प्रतीचीदिक्प्रपाकलम्।
सर्वेषां जीवनं वंदे वरुणं यादसां पतिम्।।५।।

६ वायु - इंद्रकृतानेकरुपं दितिसंभूतमद्भुतम्।
वायव्यदिक्प्रभुं वंदे वायुमंकुशधारिणम्।।६।।

७ कुबेर - यक्षराजं धनाध्यक्षं उदोचीदिक्पतिं प्रभुम्।
लोकपालमहं वंदे कुबेरं सुगदाधरम्।।७।।

८ ईश्वर -ऐशान्याधिपतिं देवं सर्वदेवसुसेवितम्।
सर्वेश्वरेश्वरं वंदे शूलधारिणमीश्वरम्।।८।।

९ ऊर्ध्वायां - ऊर्ध्वदिक्पालकं नित्यं लोकसृष्टिविधायकम्।
ब्रह्मा पितापहं प्रभुं देवं ब्रह्माणं प्रणमाम्यहम्।।९।।

१० अधः - सर्वकल्याणकर्तारं फणामंडलमंडितम्।
अनंतम् अधोदिक्पालकं दिव्यं अनंतं प्रणमाम्यहम्।।१०।।

व्रतोद्यापनचंद्रिका (संदर्भ)

**दशावतार जयंत्या -**

| ० अवतार | महिना | तिथि | काल |
|---|---|---|---|
| १ मत्स्य | चैत्र | शु. ३ | अपराह्ण |
| २ कुर्म | वैशाख | पौर्णिमा | सायंकाल |

| | | | | |
|---|---|---|---|---|
| ३ वराह | भाद्रपद | शु. ३ | | अपराह्ण |
| ४ नृसिंह | वैशाख | शु. १४ | | सायंकाल |
| ५ वामन | भाद्रपद | शु. १२ | | मध्यान्ह |
| ६ परशुराम | वैशाख | शु. ३ | | मध्यान्ह / प्रदोषकालहि मानतात |
| ७ श्रीराम | चैत्र | शु. ९ | | मध्यान्ह |
| ८ श्रीकृष्ण | श्रावण | वद्य ८ | | मध्यरात्री |
| ९ बौध्द | अश्विन | शु. ९ | | सायंकाळ |
| १० कल्की | श्रावण | शु. ६ | | सायंकाळ |

| चार युगांचा प्रारंभ | तिथि | | वर्ष |
|---|---|---|---|
| कृतयुग | कार्तिक शु. ९ | १७,२८,००० | सौरवर्ष |
| त्रेतायुग | वैशाख शु. ३ | १२,९६,००० | सौरवर्ष |
| व्दापारयुग | माघ ३० | ८,६४,००० | सौरवर्ष |
| कलियुग | भाद्रपद वद्य १३ | ४,३२,००० | सौरवर्ष |
| | एकूण वर्ष → | ४३,२०,००० | |

कापूर ओवाळून झाल्यावर राजोपचारासाठी अक्षता वाहाव्यात

**।। राजोपचार मंत्र ।।**

स्तुतिभि:सहितं गीतं निर्मितं दिव्यमुत्तमम् ।

नित्यश:कल्पितं भक्त्या गृहाण करुणानिधे ।। गीतं समर्पयामि ।

वीणातालमृदंगादिखंडभेरी च घंटिका ।

दुंदुभिर्वेणुनादश्च श्रूयतां सुरसत्तम ।।२ ।।वाद्यं समर्पयामि ।

उभयोश्चरणे बध्द्वा क्षुद्रघंटा: सुभक्तित: ।

तुष्ट्यर्थं सर्वदेवानां कृतं नित्यं विलोकय ।।३ ।। नृत्यं समर्पयामि ।

हरिन्मणिगणाबध्दं दंडशक्तिकरप्रभम् ।
सुवर्णछत्रं शोभाढ्यं गृहाण करुणानिधे ।।४ ।। छत्रं समर्पयामि ।
सुवेणुदंडसंयुक्तं चमर्याः केशसंयुतम् ।
चामरं कल्पितं भक्त्या गृहाण सुरसत्तम् ।।५ ।। चामरं समर्पयामि ।
सवितृकिरणस्पर्धि स्फुरत्किरणमंडलम् ।
आदर्शं मणिभिर्युक्तं प्रतिरुपं विलोकय ।।६ ।। दर्पणं समर्पयामि ।
प्रवालनालसद्गात्रे मुक्तामणि विभूषिते ।
पट्टसूत्रमयं देव मंचके शयनं कुरु ।।७ ।। मंचकं समर्पयामि ।
उशीरनिर्मितं दिव्यं हेमदंडसमन्वितम् ।
व्यजनं च मया दत्तं गृहाण परमेश्वर ।।८ ।। व्यजनं समर्पयामि ।

श्री गणेशाय नमः । (नवग्रहवर्णनम्)

सूर्य - पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वः सप्तरज्जुश्च, व्दिभुजः स्यात् सदारविः ।।१।।

सोम - श्वेतः श्वेतांबरधरः श्वेताश्वः श्वेतवाहनः ।
गदापाणिर्व्दिबाहुश्च कर्तव्यो वरदः शशी ।।२।।

मंगळ - रक्तमाल्यांबधरः शक्तिशूलगदाधरः ।
चतुर्भुजः रक्तरोमा वरदःस्याद् धरासुतः ।।३।।

बुध - पीतमाल्यांबधरः कर्णिकारसमद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदोबुधः ।।४।।

गुरु - देवानांच गुरुस्तद्वत् पीतवर्णश्चतुर्भुजः ।
दंडीच वरदः कार्यः साक्षसूत्रकमंडलुः ।। ५ ।।

शुक्र - दैत्यानांच गुरुस्तद्वत् श्वेतवर्णश्चतुर्भुजः ।
दंडीच वरदः कार्यः साक्षसूत्रकमंडलुः ।। ६ ।।

शनि - इंद्रनीलद्युतिःशूलीः वरदोगृध्रवाहनः ।
बाणबाणासनधरः कर्तव्यो ऽ र्कसुतस्तथा ।।७।।

राहु - करालवदनःखड्ग, चर्मशूली वरप्रदः ।
नीलसिंहासनस्थश्च, राहुरत्र प्रशस्यते ।।८।।

केतु - धूम्रा व्दिबाहवःसर्वे:, गदिनो विकृताननाः ।
गृध्रासनगता नित्यं, केतवःस्युर्वरप्रदाः ।।९।।

## पीडापरिहारक नवग्रह स्तोत्र

ग्रहाणामादिरादित्यो, लोकरक्षणकारकः।
विषमस्थानसंभूतां, पीडां हरतु मे रविः।।१।। रवि
रोहिणीशः सुधामूर्तिः, सुधागात्रः सुधाशनः।
विषमस्थानसंभूतां, पीडां हरतु मे विधुः।।२।। सोम
भूमिमुत्रो महातेजा, जगतां भयकृत् सदा।
वृष्टिकृत् वृष्टिहर्ताच, पीडां हरतु मे कुजः।।३।। मंगळ
उत्पातरुपोजगतां, चंद्रपुत्रो महाद्युतिः।
सूर्यप्रियकरो विद्वान्, पीडां हरतु मे बुधः।।४।। बुध
देवमंत्री विशालाक्षः, सदालोकहिते रतः।
अनेक शिष्यसंपूर्णः, पीडां हरतु मे गुरु।।५।। गुरु
दैत्यमंत्री गुरुस्तेषां, प्राणदश्च्च महामतिः।
प्रभुस्तराग्रहाणां च, पीडां हरतु मे भृगुः।।६।। शुक्र
सूर्यपुत्रो दीर्घदेहो, विशालाक्षः शिवप्रियः।
दीर्घचारः प्रसन्नात्मा, पीडां हरतु मे शनिः।।७।। शनि
महाशिरा महावक्त्रो, दीर्घदंष्ट्रो महाबलः।
अतनुश्च्चोर्ध्वकेशश्च्च, पीडां हरतु मे तमः।।८।। राहु
अनेकरुपवर्णैश्च्च, शतशोऽथ सहस्रशः।
उत्पातरुपो जगतां, पीडां हरतु मे शिखी।।९।। केतु

नवग्रहासंबंधात विशेष महिती। ।नवग्रहादि वर्णनम्।।

सूर्यः सोमो महीपुत्रः, सोमपुत्रो, बृहस्पतिः।
शुक्रः, शनैश्चरो, राहुः, केतुश्चेतिग्रहाःस्मृताः।।

प्रतिमानांधातुः

ताम्रकात् स्फटिकात् रक्तचंदनात् स्वर्णकादुभौ।।
राजतात् अयसः, सीसात् कांस्यात् कार्याग्रहाः क्रमात्।।

ग्रहाणां देशाः

कलिंग यमुनातीराऽवंती मगध सिंधवः।
स्युर्भोजकट सौराष्ट्र, राठीनांतर वेदिकाः।।१।।

ग्रहाणां गोत्राणि

कश्यपोत्रिर्भरव्दाजात्र्यंगिरोभृगुकश्यपाः।।
पैठीनो जैमिनिश्चेति, ग्रहगोत्राण्यनुक्रमात्।।२।।

ग्रहाणां मंडलानि

वर्तुलं चतुरस्रंच, त्रिकोणं बाण एव च।
दीर्घाब्धस्रं पंचकोणं, धनुः शूर्प ध्वजोर्कतः।।३।।
(दीर्घाब्धस्रं-चतुरस्रं)

ग्रहाणां मुखानि

शुक्रार्कौप्राङ्मुखौज्ञेयौ, गुरुसौम्या वुदङ्मुखौ।।
प्रत्यङ्मुखः शनिः सोमः, शेषा दक्षिणतोमुखाः।।४।।
(शेषाः-कुजराहुकेतवः)

ग्रहाणां वर्णानि

आदित्योंगारकौ रक्तौ, श्वेतौ शुक्रनिशाकरौ।
शनि राहौ कृष्ण वर्णौ, गुरु सौम्यौतु पीतकौ।।
केतुश्च धूम्रवर्णस्यात्, ग्रहाणां वर्णलक्षणं।।५।।

नवग्रहांसाठी हवनीय फळे - सूर्यादि क्रमाने - १)द्राक्ष २)इक्षु -उसाचे तुकडे ३)पूगम्- टरफलासह सुपारी ४)नारिंग - नारिंग ५)जंबीर -इडर्लींबू/महाळुंग ६)बीजपूरक -फळ/महाळुंग ७)उत्तती -खारीक ८)नारिकेल -नारळ ९)दाडिम - डाळिंब (संदर्भ - व्रतोद्यापन चंद्रिका)

## ग्रहधान्यानि

१ गोधूमाः सूर्य दैवत्याः सूर्यप्रीतिकराः सदा।
तस्मादेषां प्रदानेन समे सूर्यः प्रसीदतु।।१।।

२ तंडुलाश्च्चंद्र दैवत्याः चंद्रप्रीतिकरा शुभाः।
तस्मादेषां प्रदानेन समे चंद्रः प्रसीदतु।।२।।

३ आढका भौमदैवत्याः भौभ प्रीतिकराः शुभाः।
तस्मादेषां प्रदानेन समे भौमः प्रसीदतु।।३।।

४ मुद्गाश्च्च सौम्य दैवत्याः सौम्य प्रीतिकराः शुभाः।
तस्मादेषां प्रदानेने समे सौम्यः प्रसीदतु।।४।।

५ चणका गुरु दैवत्या गुरु प्रीतिकराः सदा।
तस्मादेषां प्रदानेन समे जीवः प्रसीदतु।।५।।

६ निष्पापाः शुक्रदैवत्या शुक्रप्रियकराः सदा। (पांढरे वाल)
तस्मादेषां प्रदानेन समे शुक्रः प्रसीदतु।।६।।

७ तिलाः काश्यप संभूताः तिलाः पापहराः शुभाः।
तिलदान प्रदानेन समे मंदः प्रसीदतु।।७।।

८ माषाश्च्च राहुदैवत्याः राहोः प्रीतिकराः शुभाः।
तस्मादेषां प्रदानेन समे राहुः प्रसीदतु।।८।।

९ कुळिथ्थ्याः केतुदैवत्याः केतु प्रीतिकरा सदा।
तस्मादेषां प्रदानेन समे केतुः प्रसीदतु।।९।।

नवग्रहांसाठी हवनीय फळे - सूर्यादि क्रमाने -

द्राक्षेक्षुपूगनारिंग जंबीर बीजपूरकम् ।
उत्तती नारिकेलं च दाडिमः क्रमशः फलम् ।।

१)द्राक्ष २)इक्षु(उसाचे तुकडे) ३)पूगम् (टलफलासह सुपारी ४)नारिंग ५)जंबीर (इडलींबू/महाळुंग ६)बीजपूरक (फळ/महाळुंग) ७)उत्तती (खरीक) ८)नारिकेल (नारळ) ९)दाडिम(डाळिंब)
(संदर्भ - व्रतोद्यापनचंद्रिका)

कार्य कोणत्या पध्दतीने करावे-

कर्तुः शास्त्रोक्तमार्गेण आचार्यस्याथवा पुनः ।
कुर्यादग्निप्रणयनं हवनादि विधिस्तथा ।।१।।

## सुवर्ण धारण करण्याचे महत्व -

ओम् नतद्रक्षा ँ सि न पिशाचास्तरंति देवानामोजप्रथमज ँ ह्येतत्। यो बिभर्ति दाक्षायण ँ हिरण्य ँ स देवेषु कृणुते दीर्घमायुःस मनुष्येषु कृणुते दीर्घमायुः ।।

सोने (सुवर्ण) देवांचे श्रेष्ठ असे तेज असल्याने राक्षस व पिशाच्चे, सोने पाहून दूर पळून जातात, जी व्यक्ती अलंकाराच्या स्वरुपात सोने धारण करते ती दीर्घकाळ देवलोकात सुखाने राहाते. आणि पृथ्वीवर दीर्घायुषी होते.

**अग्नीची प्रार्थना -** नशेरे.

ओम् अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि व्दिपदे चतुष्पदे ।।

हे अग्निनारायणा, आम्हाला रोगनाशक, बलवर्धक, अन्न दे. अन्नदात्याची सर्व प्रकारे वृध्दि कर. आमचे सेवक व पशु सशक्त बनून त्यांचे कल्याण कर.

**सुवर्ण धारण करण्याचे महत्व -**

ओम् नतद्रक्षा ँ सि न पिशाचास्तरंति देवानामोजप्रथमज ँ ह्येतत् ।
यो बिभर्ति दाक्षायण ँ हिरण्य ँ स देवेषु कृणुते दीर्घमायुःस मनुष्येषु कृणुते दीर्घमायुः ।।

सोने (सुवर्ण) देवांचे श्रेष्ठ असे तेज असल्याने राक्षस व पिशाच्चे, सोने पाहून दूर पळून जातात, जी व्यक्ती अलंकाराच्या स्वरुपात सोने धारण करते ती दीर्घकाळ देवलोकात सुखाने राहाते. आणि पृथ्वीवर दीर्घायुषी होते.

**यज्ञ संदर्भात अग्नीचे सवरुप -**

ओम् चत्वारि शृंगा त्रयो अस्य पादा व्दे शीर्षे सप्तहस्तासो अस्य ।
त्रिधा बध्दो वृषभो रोरवीति महो देवो मर्त्या ँ अविवेश ।

**मंत्रात आलेल्या संख्यांचे यज्ञसंबंधित अर्थ.**

चत्वारि शृंगा -चार शिंगे, ब्रह्मा, उद्गाता, होता व अध्वर्यु.
त्रयः पादाः - तीन पाय, ऋग्वेद, यजुर्वेद, सामवेद.
व्दे शीर्षे - दोन मस्तके, हविर्धान, प्रवर्ग्य.
त्रिधा बध्दः- तीन बंधन, प्रातः सवन, मध्यंदिन सवन, तृतीय सव.

**सात संख्येचा महिमा दाखवणारा मंत्र**

ओम् सप्त ते अग्ने समिधः, सप्त जिव्हाः ,सप्त ऋषयः ,सप्त धाम, प्रियाणि । सप्त होत्राः,सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन ।
सात समधि - सात प्राण

सात जिव्हा - सात ज्वाला, काली, कराली, मनोजवा, विलोहिता, सधूम्रवर्णा, स्फुल्लिंगिनी, व विश्वरुचि, (मुंडकोपनिषद्)

सात ऋषि- मरीचि, अत्रि, अंगिरा, फुलस्त्य, पुलह, क्रतु, वसिष्ठ.

सात स्थान - आहवनीय, गार्हपत्य, दक्षिणाग्नि, सभ्य, आवसथ्य, प्राजाहित, आणि आग्नीध्री (सोमयागातील स्थान)

सात ऋत्विज- होता, प्रशास्ता, ब्राह्मणाच्छंशी, पोता, नेष्टा, आग्नीध्र आणि अच्छावाक्.

यज्ञाचे सात प्रकार - अग्निष्टोम, अत्यग्निष्टोम, उक्थ, षोडशी, अतिरात्र, आप्तोर्याम, आणि वाजपेय.

सात योनि - सात चिति. (श. ब्रा. ९।२।३।४४)

**ऋषिवर्यांनी गाईच्या वासरांविषयी सांगितलेली वय सूचक नांवे**

| **स्त्रीलिंगी** | | **पुल्लींगी** |
|---|---|---|
| कालवड | गाईचे वासरु - | गोऱ्हा |
| त्र्यवी - | दीड वर्षांचे वासरु. | त्र्यवी |
| दित्यौही - | दोन वर्षांचे वासरु. | दित्यवाद |
| पंचावी - | अडीच वर्षांचे वासरु. | पंचावि |
| त्रिवत्सा - | तीन वर्षांचे वासरु. | त्रिवत्सः |
| तुर्यौही - | साडेतीन वर्षांचे वासरु. | तुर्यवाट |
| पष्ठौही - | चार वर्षांचे वासरु. | पष्ठवाट |
| वशा - | वंध्या गाय. | --- |
| ------ | वीर्यसेचनास योग्य गोऱ्हा | उक्षा |
| वेहत् - | गर्भघातिनी गाय. | |
| | तरुण बैल | ऋषभ |
| धेनु - | नवप्रसूता गाय. | |

गाडी/नांगर /मोट ओढू शकणारा समर्थ बैल अनड्वाह

।।अथ चतुर्दशयमदेवतानां आवाहन मंत्राः।।

१ यमं - यमस्त्वं यमुनाभ्राता यमदंडधरः सदा।
पापिनां पापनाशार्थं स्थाने चात्र स्थिरो भव।।१।।

अस्मिन् पूगीफले यमं आवाहयामि, स्थापयामि, पूजयामि।
एवं प्रकारेण सर्वत्र आवाहनं कर्तव्यम्।

२ धर्मराजं - धर्माधर्मविचारज्ञो धर्ममार्गं प्रवर्तकः।
अतोऽसि धर्मराजस्त्वं स्थाने चात्र स्थिरो भव।।२।।

अस्मिन् पूगीफले धर्मराजं आवाहयामि, इत्यादि०

३ मृत्युं - स्थावराजंगमानां त्वं कल्पे नाशकरः सदा।
अतो मृत्युरितिख्यातः स्थाने चात्र स्थिरो भव।।३।।

अस्मिन् पूगीफले मृत्युं आवाहयामि, इत्यादि०

४ अंतकं - महामहिषमारुढो दंडपाणिर्महाबलः।
कृष्णाभः कृष्णवर्णस्त्वं स्थाने चात्र स्थिरो भव।।४।।

अस्मिन् पूगीफले अंतकं आवाहयामि, इत्यादि०

५ वैवस्वतं - सूर्यवीर्यात् समुत्पन्नो वैवस्वतो महाबलः।
प्रेतानां पापनाशाय स्थानेऽस्मिन् स्थिरो भव।।५।।

अस्मिन् पूगीफले वैवस्वतं आवाहयामि, इत्यादि०

६ कालं - कालाय कालरुपाय कालांजनसमप्रभो।
दक्षिणस्यां कृतावासः कालदेव नमोऽस्तुते।।६।।

अस्मिन् पूगीफले कालं आवाहयामि, इत्यादि०

७ सर्वभूतक्षयं -कल्पे कल्पे च भूतानां क्षयकर्ता त्वमेव च।
सर्वभूतक्षयो नाम स्थाने चात्र स्थिरो भव।।७।।

अस्मिन् पूगीफले सर्वभूतक्षयं आवाहयामि, इत्यादि०

८ औदुंबरं - औदुंबर महादेव महाबुद्धिविशारद।
प्रेतमुक्तिप्रदानाय स्थानेऽस्मिन् सुस्थिरो भव।।८।।

अस्मिन् पूगीफले औदुंबरं आवाहयामि, इत्यादि०

९ दघ्नं - दघ्नंदेव नमस्तेऽस्तु लोकानां भीतनाशकृत्।
प्रेतयोनिविनाशाय स्थाने चात्र स्थिरो भव।।९।।

अस्मिन् पूगीफले अघ्नं आवाहयामि, इत्यादि०

१० नीलं - नीलगुणविशिष्टो हि नीलनाम्ना प्रकीर्त्यति।
प्रेतनीलत्वनाशाय स्थाने चात्र स्थिरो भव।।१०।।

अस्मिन् पूगीफले नीलं आवाहयामि, इत्यादि०

११ परमेष्ठिनं -उत्कृष्टस्थनमाश्रित्य स्थितोऽसि परमेश्वर।
परमेष्ठिन्निति ख्यातः स्थाने चात्र स्थिरो भव।।११।।

अस्मिन् पूगीफले परमेष्ठिनं आवाहयामि, इत्यादि०

१२ वृकोदरं - वृकोदरो महाभीमो जगद्भीतिकरो भवान्।
प्रेतभीतिनिवृत्त्यर्थ स्थाने चात्र स्थिरो भव।।१२।।

अस्मिन् पूगीफले वृकोदरं आवाहयामि, इत्यादि०

१३ चित्रं - जगतामादिदेवेन जगच्चित्राय निर्मितः।
प्रेताकृतिविनाशाय स्थाने चात्र स्थिरो भव।।१३।।

अस्मिन् पूगीफले चित्रं आवाहयामि, इत्यादि०

१४ चित्रगुप्तं - नानाविधानां वित्राणां गोपनाय त्वमर्हसि।
चित्रगुप्तेति विख्यातः स्थाने चात्र स्थिरो भव।।१४।।

अस्मिन् पूगीफले चित्रगुप्तं आवाहयामि, इत्यादि०

वरील मंत्रांनी यमादी १४ देवतांचे आवाहन करुन "यमाद्यावाहितदेवताभ्यो नमः" इति मंत्रेण षोडशोपचारैः पूजयेत्।
त्रिपाद व पंचकशांतीचे वेळी यमादि १४ देवतांची पूजा करण्याची पध्दत आहे., त्या वेळी हे वरील मंत्र उपयोगात आणावेत.

संदर्भ - "श्राध्दकौमुदी"

।।अथ अग्न्युत्तारणपूर्वक प्राणप्रतिष्ठा।। पुराणोक्त।।

आचमन करुन संकल्प करावा ---

अद्यपूर्वोच्चरित ० ----- शुभपुण्यतिथौ, अस्याः मूर्तेः अंग प्रत्यंगसंधि समुत्पन्न, घर्षण, ताडन, तापन, टंकाघात, अग्नितापादि, जनित दोषपरिहारार्थं, अग्न्युत्तारण पूर्वक, देवत्व संनिधानेन, पूजार्हता सिध्द्यर्थं प्राणप्रतिष्ठां करिष्ये।

मूर्तीला तूप लावावे. नंतर पाण्याची धार धरावी, व खालील मंत्र ३ वेळा म्हणावा.

(घृतेन मूर्तिं अभ्यज्य, उपरि जलधारां कुर्यात्, तत्र मंत्रः)

अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः।

अग्नेरुत्तारणार्थाय, मूर्तीनां शुध्दिहेतवे।। (३ वेळा म्हणावा)

अस्य श्री प्राणप्रतिष्ठा मंत्रस्य, ब्रह्माविष्णुमहेश्वराऋषयः ऋग्यजुः सामाथर्वाणि छंदांसि, जगत् सृष्ठिकारिणी, प्राणशक्तिः देवता, सर्वसौख्यकारिणी देवता, अस्याः मूर्तेः, प्राणजीवेंद्रियसिध्द्यै, जपाम्यहम्। यदिक्षांताक्षरमनुमंत्रिताः, प्राणवायवः।

नमस्कार करुन म्हणावे ---

इह तिष्ठंतु भूयोऽपि तेनमंत्रेण मंत्रिताः।

जीवो वसतु पूजांतं, पुनरुच्चारमंत्रिताः।।

जीवो वासतु पूजांतं, पुनरुच्चारमंत्रितम्।

चतुर्विंशति तत्वानां, वृंदंतिष्ठतु वै चिरम्।।

अस्याः मूर्तेः, सर्वेंद्रियाणि, वाङ्मनस्त्वक्, चक्षुश्रोत्र, जिह्वा, घ्राण, पाणिपाद, पायूपस्थानि, इहैव आगत्य, सुखं, चिरं तिष्ठंतु नमः।

ततः गर्भाधानादि, षोडशसंस्कार सिध्द्यर्थं, षोडशप्रणवावृत्तिंकरिष्ये।

"ह्रीं" इति षोडशवारं जपेत्। ("ह्रीं"असे १६ वेळा म्हणावे)

अनेन षोडशसंस्कारः संपद्यंताम्। (असे म्हणून उदक सोडावे.)

मूर्तीच्या हृदयाला दूर्वाग्रांचा स्पर्श करुन म्हणावे.

अस्यैः प्राणाः प्रतिष्ठंतु, अस्यै प्राणाः क्षरंतु च ।
अस्यैः देवत्वमर्चायै, मामहेति च कश्चन ।।

दूर्वेने देवाच्या डोळयांना तूप लावावे. आणि म्हणावे.

ज्ञानतेजोमये नेत्रे, जगन्मंगलकारके ।
उन्मीलिते मया भक्त्या, मांगल्यं परिवर्धताम् ।।

प्राणशक्तीला नमस्कार करावा. म्हणावे.

सच्चिदानंदरुपाया, सर्वचैतन्यदायिनी ।
प्राणरुपापराशक्तिः, सर्वान् रक्षतु संततम् ।।

"प्राणशक्त्यैः नमः" असे म्हणून गंध, पुष्प, धूप, दीप, नैवेद्यं समर्पयामि, नमस्करोमि, "त्रैलोक्यस्य मंगलं कुरु" इति प्रार्थयेत् ।

अनेन मूर्तेः प्राणप्रतिष्ठाख्येन कर्मणा, प्राणशक्तिः प्रीयताम् ।

-- इति प्राणप्रतिष्ठा --

संदर्भ - १ व्रतोद्यापन चंद्रिका २ कृत्य संग्रह